॥ श्रीमज्जगद्गुरुशङ्करभगवत्पूज्यपादाचार्यस्तवः ॥

ॐ श्री गुरुभ्यो नमः ।

मुदा करेण पुस्तकं दधानमीशरूपिणं
तथाऽपरेण मुद्रिकां नमत्तमोविनाशिनीम् ।
कुसुम्भवाससावृतं विभूतिभासिफालकं
नताघनाशने रतं नमामि शङ्करं गुरुम् ॥ १॥

पराशरात्मजप्रियं पवित्रितक्षमातलं
पुराणसारवेदिनं सनन्दनादिसेवितम् ।
प्रसन्नवक्त्रपङ्कजं प्रपन्नलोकरक्षकं
प्रकाशिताद्वितीयतत्त्वमाश्रयामि देशिकम् ॥ २॥

सुधांशुशेखरार्चकं सुधीन्द्रसेव्यपादुकं
सुतादिमोहनाशकं सुशान्तिदान्तिदायकम् ।
समस्तवेदपारगं सहस्रसूर्यभासुरं
समाहिताखिलेन्द्रियं सदा भजामि शङ्करम् ॥ ३॥

यमीन्द्रचक्रवर्तिनं यमादियोगवेदिनं
यथार्थतत्त्वबोधकं यमान्तकात्मजार्चकम् ।
यमेव मुक्तिकाङ्क्षया समाश्रयन्ति सज्जना
नमाम्यहं सदा गुरुं तमेव शङ्कराभिधम् ॥ ४॥

स्वबाल्य एव निर्भरं य आत्मनो दयालुतां
दरिद्रविप्रमन्दिरे सुवर्णवृष्टिमानयन् ।
प्रदर्श्य विस्मयाम्बुधौ न्यमज्जयत् समान् जनान्
स एव शङ्करः सदा जगद्गुरुर्गतिर्मम ॥ ५॥

यदीयपुण्यजन्मना प्रसिद्धिमाप कालटी
यदीयशिष्यतां व्रजन् स तोटकोऽपि पप्रथे ।
य एव सर्वदेहिनां विमुक्तिमार्गदर्शको
नराकृतिं सदाशिवं तमाश्रयामि सद्गुरुम् ॥ ६॥

सनातनस्य वर्त्मनः सदैव पालनाय यः
चतुर्दिशासु सन्मठान् चकार लोकविश्रुतान् ।
विभाण्डकात्मजाश्रमादिसुस्थलेषु पावनान्
तमेव लोकशङ्करं नमामि शङ्करं गुरुम् ॥ ७॥

यदीयहस्तवारिजातसुप्रतिष्ठिता सती
प्रसिद्धशृङ्गभूधरे सदा प्रशान्तिभासुरे ।
स्वभक्तपालनव्रता विराजते हि शारदा
स शङ्करः कृपानिधिः करोतु मामनेनसम् ॥ ८॥

इमं स्तवं जगद्गुरोर्गुणानुवर्णनात्मकं
समादरेण यः पठेदनन्यभक्तिसंयुतः ।
समाप्नुयात् समीहितं मनोरथं नरोऽचिरात्
दयानिधेः स शङ्करस्य सद्गुरोः प्रसादतः ॥ ९॥

इति श्रीभारतीतीर्थमहास्वामिभिः विरचितम्
शङ्करभगवत्पूज्यपादाचार्यस्तवः सम्पूर्णम् ॥